# ॥ श्रीरेणुकासहस्रनामस्तोत्रम् ॥

अथ श्रीरेणुकातन्त्रान्तर्गतं श्रीरेणुकासहस्रनामस्तोत्रम् ।

श्री गणेशाय नमः । श्री रेणुकायै नमः ।
गिरिपृष्ठे समासीनं शङ्करं लोकशङ्करम् ।
प्रणतः परिपप्रच्छ संशयस्थः षडाननः ॥ १॥

स्कन्द उवाच --

तात सर्वेश्वरस्त्वं हि सर्वज्ञः सर्वभावनः ।
कथयस्व प्रसादेन रहस्यं सकलार्थदम् ॥ २॥

विजयः सङ्कटे घोरे निर्विघ्नं बलमुत्कटम् ।
अन्येऽपि वाञ्छितार्थाश्च सिद्ध्यन्त्याशु विना श्रमम् ॥ ३॥

शङ्कर उवाच --

साधु पृष्टं महाबाहो संशयो मास्तु मास्तु ते ।
यदनुष्ठानमात्रेण सर्वान्कामानवाप्स्यसि ॥ ४॥

कस्यचिन्नयदाख्यातं तद्रहस्यं वदाम्यहम् ।
स्तोत्रं सहस्रनामाख्यं रेणुकायास्तु सिद्धिदम् ॥ ५॥

सद्यः प्रत्ययकामस्त्वं शृणु षण्मुख भक्तितः ।
सर्वदेवाश्च वेदाश्चक्षीणवीर्या युगे युगे ॥ ६॥

अक्षीणफलदात्रीयं त्रिसत्यं मम भाषितम् ।
सर्वदेवमयी देवी रेणुका कामदार्चिता ॥ ७॥

पुरदाहे मया ध्याता तथैव गरलाशने ।
विष्णुना सागरोन्माथे ब्रह्मणा सृष्टिकर्मणि ॥ ८॥

गोत्रभेदे मघवता जगती धारणेऽहिना ।
कामेन शम्बरवधे रत्या तत्प्राप्तये पुनः ॥ ९॥

गणाधीशेन सततं विघ्नवारणकर्मणि ।
किं वत्स बहुनोक्तेन हैमवत्या मदाख्यया ॥ १०॥

ध्यात्वा सर्वार्थदा सा हि सर्वलोकैकसंश्रया ।
महत्कार्योद्यतैरन्यैर्बहुभिश्चिन्तिता शिवा ॥ ११॥

धर्मार्थकाममोक्षार्थमवाङ्मनसगोचरा ।
तस्या एव प्रसादात्तां स्तौमि नामावलिच्छलात् ॥ १२॥

ऋष्यादिकं च सङ्क्षेपात्कथयामि षडानन ।
त्र्यम्बकश्च ऋषिः प्रोक्तोऽनुष्टुप्छन्दः प्रकीर्तितम् ॥ १३॥

एकवीरा महामाया रेणुका दैवतं स्मृतम् ।
सर्वपापक्षयद्वारा प्रीत्यै देव्या मुहुर्मुहुः ॥ १४॥

सर्वाभीष्टफलप्राप्तौ विनियोग उदाहृतः ।
रेणुका राममातेति महापुरनिवासिनी ॥ १५॥

एकवीरा कालरात्रिरेकला नामभिः क्रमात्
अङ्गुष्ठादि करन्यासो हृदयादि षडङ्गकम् ।
चतुर्थ्यन्तैर्नमोन्तैश्च प्रणवादिभिराचरेत् ॥ १६॥

अस्य श्री रेणुका सहस्रनामस्तोत्रमन्त्रस्य त्र्यम्बक ऋषिः
श्रीरेणुका देवता । अनुष्टुप्छन्दः । सर्वपापक्षयद्वारा
श्री जगदम्बा रेणुका प्रीत्यर्थं सर्वाभीष्टफलप्राप्त्यर्थं
च जपे विनियोगः ।
अथ न्यासः - श्रीरेणुकायै नमः अङ्गुष्ठाभ्यां नमः ।
ॐ राममात्रे नमः तर्जनीभ्यां नमः ।
ॐ महापुरवासिन्यै नमः मध्यमाभ्यां नमः ।
ॐ एकवीरायै नमः अनामिकाभ्यां नमः ।
ॐ कालरात्र्यै नमः कनिष्ठिकाभ्यां नमः ।
ॐ एकलायै नमः करतलकरपृष्ठाभ्यां नमः ।
एवं हृदयादि- ॐ रेणुकायै नमः हृदयाय नमः ।
ॐ राममात्रे नमः शिरसे स्वाहा ।
ॐ महापुरवासिन्यै नमः शिखायै वषट् ।
ॐ एकवीरायै नमः कवचाय हुं ।
ॐ कालरात्र्यै नमः नेत्रत्रयाय वौषट् ।
ॐ एकलायै नमः अस्त्राय फट् ।

ध्यानम् --

ध्यायेन्नित्यमपूर्ववेषललितां कन्दर्पलावण्यदां
देवीं देवगणैरुपास्यचरणां कारुण्यरत्नाकराम् ।
लीलाविग्रहिणीं विराजितभुजां सच्चन्द्रहासादिभि-
र्भक्तानन्दविधायिनीं प्रमुदितां नित्योत्सवां रेणुकाम् ॥ १७॥

ॐ रेणुका रामजननी जमदग्निप्रिया सती ।
एकवीरा महामाया कालरात्रिः शिवात्मिका ॥ १८॥

महामोहा महादीप्तिः सिद्धविद्या सरस्वती ।
योगिनी चन्द्रिकासिद्धा सिद्धलक्ष्मीः शिवप्रिया ॥ १९॥

कामदा कामजननी मातृका मन्त्रसिद्धिदा ।
मन्त्रसिद्धिर्महालक्ष्मी मातृमण्डलवल्लभा ॥ २०॥

चन्द्रिका चन्द्रकान्तिश्च सूर्यकान्तिः शुचिस्मिता ।
योगेश्वरी योगनिद्रा योगदात्री प्रभावती ॥ २१॥

अनाद्यन्तस्वरूपा श्रीः क्रोधरूपा महागतिः ।
मनःश्रुतिस्मृतिर्घ्राणचक्षुस्त्वग्रसना रसा ॥ २२॥

मातृका पतिरुत्क्रोशा चण्डहासा महावरा ।
महावीरा महाशूरा महाचापा रथस्थिता ॥ २३॥

बर्हिपत्रप्रिया तन्वी बर्हिपत्रा चतुर्भुजा ।
नादप्रिया नादलुब्धा त्र्यक्षरा मृतजीवनी ॥ २४॥

अमृतामृतपानेष्टा सिन्धुपा पात्रशालिनी ।
चण्डहासधरा शूरा वीरा डमरुमालिनी ॥ २५॥

शिरोधरा पात्रकरा वरदा वरवर्णिनी ।
त्रिमूर्तिर्वेदजननी वेदविद्या तपोनिधिः ॥ २६॥

तपोयुक्ता तपोलक्ष्मीस्तपसः सिद्धिदापरा ।
ललिता सात्विकी शान्ता राजसी रक्तदन्तिका ॥ २७॥

एकला रेणुतनया कामाक्षी सत्परायणा ।
ऐन्द्री माहेश्वरी ब्राह्मी वैष्णवी वडवानला ॥ २८॥

कावेरी घनदा याम्या याम्याग्नेयी तनुर्निशा ।
ईशानी नैर्ऋतिः सौम्या माहेन्द्री वारुणी समा ॥ २९॥

सर्वर्षिध्येयचरणा नृवारणा नरवल्लभा ।
भिल्लीवेषधरा भिल्लीवर्वरालक मण्डिता ॥ ३०॥

शृङ्गीवादन सुरसा गुञ्जाहार विभूषणा ।
मयूर पिच्छाभरणा श्यामा नीलाम्बरा शिवा ॥ ३१॥

कालिका रेणुदुहिता शिवपूज्या प्रियंवदा ।
सृष्टिकृत् स्थितिकृत्क्रुद्धा पृथ्वी नारदसेविता ॥ ३२॥

संहारकारिणीन्द्राक्षी रक्षोघ्नी चन्द्रशेखरा ।
हुं फट् वौषट् वषड्रूपा स्वधा स्वाहा नमो मनुः ॥ ३३॥

सुषुप्तिर्जाग्रतिर्निद्रा स्वप्ना तुर्या च चक्रिणी ।
तारा मन्दोदरी सीताऽहल्याऽरुन्धतिका दितिः ॥ ३४॥

भगीरथी च कावेरी गौतमी नर्मदा मही ।
सरयूर्गौतमी भीमा त्रिवेणी गण्डकी सरी ॥ ३५॥

मानसं चन्द्रभागा च रेवा गङ्गा च वेदिका ।
हरिद्वारं मातृपुरं दत्तात्रेयनिवासभूः ॥ ३६॥

मातृस्थादिसंस्थाना मातृमण्डलमण्डिता ।
मातृमण्डलसम्पूज्या मातृमण्डलमध्यगा ॥ ३७॥

नानास्थानावताराद्या नानास्थानचरित्रकृत् ।
कमला तुलजात्रेयी कोह्लापुरनिवासिनी ॥ ३८॥

मन्दाकिनी भोगवती दत्तात्रेयानुसूयका ।
षट्चक्रदेवता पिङ्गा जमदग्नीश्वरार्द्धहृत् ॥ ३९॥

इडाख्या च सुषुम्नाख्या चन्द्रसूर्यगतिर्वियत् ।
चन्द्रसूर्यसमाख्याता सर्वस्त्रीनिलयाध्वनिः ॥ ४०॥

समस्तविद्यातत्त्वज्ञा सर्वरूपा सुखाश्रया ।

पुण्यपापेश्वरी कीर्तिर्भोक्त्री भोगप्रवर्तिनी ॥ ४१॥

जमदग्न्यस्य जननी कविशक्तिः कवित्वदा ।
ह्रीङ्काराम्बा तमोरूपा क्लीङ्कारा कामदायिनी ॥ ४२॥

वाक्प्रदैङ्काररूपा च मुक्तिदौङ्काररूपिणी ।
श्रीङ्काराखिलदानोक्ता सर्वबीजात्मिकात्मभूः ॥ ४३॥

जमदग्नि शिवाङ्कस्था धर्मार्थकाममोक्षदा ।
जमदग्निक्रोधहरा जमदग्निवचःकरी ॥ ४४॥

जमदग्नितमोहन्त्री जमदग्निसुखैकभूः ।
जितवीरा वीरमाता वीरभूर्वीरसेविता ॥ ४५॥

वीरदीक्षाकरी सौर्यदीक्षिता सर्वमङ्गला ।
कात्यायनी परीवारा कालकाला कलानिधिः ॥ ४६॥

अष्टसिद्धिप्रदा क्रूरा क्रूरग्रहविनाशिनी ।
साकारा च निराकाराहङ्काराकारणा कृतिः ॥ ४७॥

सम्मता विषमघ्नी च विषहन्त्री विषाशना ।
व्यालाभरणसंहृष्टा व्यालमण्डनमण्डिता ॥ ४८॥

अणुरूपा पराणुश्च सद्रूपा च महापरा ।
ह्रस्वा ह्रस्वपरा दीर्घा परदीर्घा परात्परा ॥ ४९॥

अद्वयाद्वयरूपा च प्रपञ्चरहिता पृथुः ।
स्थूलसूक्ष्मा निरीहा च स्नेहाञ्जनविवर्जिता ॥ ५०॥

ब्रह्मसूता महानिद्रा योगनिद्रा हरिस्तुता ।
हिरण्यगर्भरूपा च परब्रह्मस्वरूपिणी ॥ ५१॥

ब्रह्मशक्तिर्ब्रह्मविद्या विश्वबीजा निरञ्जना ।
अतुला कर्मरूपा च श्यामला परिघायुधा ॥ ५२॥

नारायणी विष्णुशक्तिः अवाङ्मनसगोचरा ।
घृतमारी पुण्यकरी पुण्यशक्तिरमाम्बिका ॥ ५३॥

रक्तबीजवधोद्रिक्ता रक्तचन्दनचर्चिता ।
सुरक्तपुष्पाभरणा रक्तदंष्ट्राभयप्रदा ॥ ५४॥

तीक्ष्णरक्तनखारक्ता निशुम्भप्राणकृन्तिनी ।
शुम्भप्राणनिहन्त्री च महामृत्युविनाशिनी ॥ ५५॥

सर्वदेवमहाशक्तिर्महालक्ष्मी सुरस्तुता ।
अष्टादशभुजार्च्यांशा दशदोर्दण्डमण्डिता ॥ ५६॥

निष्कलाष्टभुजा धात्री कल्पातीता मनोहरा ।
कल्पना रहिताच्यार्द्या दारिद्र्यवनदाहिनी ॥ ५७॥

कौस्तुभा पारिजाता च हाहादिरूपधारिणी ।
तिलोत्तमाप्सरोरूपा नवनागस्वरूपिणी ॥ ५८॥

निधिरूपा समाधिस्था खड्गरूपा शवस्थिता ।
महिषासुरदत्तांघ्रिः सिंहगा सिंहगामिनी ॥ ५९॥

त्रिशूलधारिणी प्रौढा बाला मुग्धा सुधर्मिणी ।
शङ्खभृच्चक्रभृत्पाशा गदाभृत्पाशमण्डिता ॥ ६०॥

कालशक्तिः कृपासिन्धुर्मृगारिवरवाहना ।
गणराजमहाशक्तिः शिवशक्तिः शिवस्तुता ॥ ६१॥

हरिप्रिया श्राद्धदेवी प्रधाना गुहरूपिणी ।
गुहप्रीता गणेट्प्रीता कामप्रीता गुहस्थिता ॥ ६२॥

सर्वार्थदायिनी रौद्री नीलागतिरलोलुपा ।
चामुण्डा चित्रघण्टा च विश्वयोनिर्निरन्तरम् ॥ ६३॥

श्रावणी श्रमहन्त्री च संसारभ्रमनाशिनी ।
संसारफलसम्पन्ना संसारमतिरुच्चगा ॥ ६४॥

उच्चासनसमारूढा विमानवरगामिनी ।
विमानस्था विमानघ्नी पाशघ्नी कालनाशिनी ॥ ६५॥

कालचक्रभ्रमभ्रान्ता कालचक्रप्रवर्तिनी ।
चेतना चापिनी भव्या भव्याभव्यविनाशिनी ॥ ६६॥

सिंहासनसुखाविष्टा क्षीरसागरकन्यका ।
वणिक्कन्या क्षेमकरी मुकुटेशावनिस्थिता ॥ ६७॥

श्रुतिज्ञा च पुराणज्ञा स्मृतिज्ञा वेदवादनी ।
वेदवेदार्थतत्त्वज्ञा हिङ्गुला कालशालिनी ॥ ६८॥

इतिहासार्थविद्धर्म्या ध्येया हन्त्री शिशुप्रिया ।
स्तन्यदा स्तन्यधारा च वनस्था पार्वतीशिवा ॥ ६९॥

मेना मैनाकभगिनी सुरभिर्जलभुक्तडित् ।
सर्वबीजान्तरस्थात्री सकलागमदेवता ॥ ७०॥

स्थलस्थला जलस्था च वनस्था वनदेवता ।
क्षयहन्त्री निहन्त्री च निरातङ्कामरप्रिया ॥ ७१॥

त्रिकालज्ञा त्रिरूपा च लीलाविग्रहधारिणी ।
समाधिः पुण्यधिः पुण्या पापाज्ञानविनाशिनी ॥ ७२॥

दृश्या दृग्विषया दृष्टिः पापहन्त्री शमस्थिता ।
विरथा रथनिष्ठा च वरूथरथसंस्थिता ॥ ७३॥

मधुकैटभहन्त्री च सर्वदेवशरीरभृत् ।
त्रिपुरा पुण्यकीर्तिश्च नृपवश्यप्रदायिनी ॥ ७४॥

सांख्यविद्या त्रयीविद्या योगविद्या रविस्थिता ।
स्थावरा जङ्गमा क्षान्तिर्बलिशक्तिर्बलिप्रिया ॥ ७५॥

महिषासुरनिर्णाशी दैत्यसैन्यपरान्तकृत् ।
डमड्डमरुडाङ्कारा वीरश्रीर्जनदेवता ॥ ७६॥

उद्गीथोद्गीथमर्यादा क्षीरसागरशायिनी ।
वीरलक्ष्मीर्वीरकान्ता शिवदूती सनातनी ॥ ७७॥

शक्रादिसंस्तुता हृष्टा चण्डमुण्डविनाशिनी ।
पञ्चवक्त्रैकरूपा च त्रिनेत्रावलिमोहिनी ॥ ७८॥

धूम्रलोचननिर्नाशाहङ्कारोद्गारभाषिणी ।

एकमूर्तिस्त्रिधामूर्तिः त्रिलोकानन्ददायिनी ॥ ७९॥

भवानी दशमूर्तिश्च पञ्चमूर्तिर्जयन्तिका ।
दक्षिणा दक्षिणामूर्तिः अनेकैकादशाकृतिः ॥ ८०॥

एकचक्षुरनन्ताक्षी विश्वाक्षी विश्वपालिनी ।
चतुर्विंशतितत्त्वाद्या चतुर्विंशतितत्त्ववित् ॥ ८१॥

सोऽहं हंसाविशेषज्ञा निर्विशेषा निराकृतिः ।
यमघण्टामृतकला जयघण्टा जयध्वनिः ॥ ८२॥

पाञ्चजन्यस्फुरच्छक्तिर्हनुमच्छक्तिरास्तिका ।
शीलातरणशक्तिश्च रामशक्तिर्विराट्तनुः ॥ ८३॥

लङ्काप्रज्वलना वेला सागरक्रमणक्रमात् ।
नरनारायणप्रीतिर्लोकनीतिरघौघकृत् ॥ ८४॥

विपाशा पाशहस्ता च विश्वबाहुस्त्रिलिङ्गिका ।
प्राची प्रतीची विदिशा दक्षिणा दक्षकन्यका ॥ ८५॥

शिवलिङ्गप्रतिष्ठात्री शिवलिङ्गप्रतिष्ठिता ।
अज्ञाननाशिनी बुद्धिस्तत्त्वविद्या सुचेतना ॥ ८६॥

प्रकाशा स्वप्रकाशा च द्वयाद्वयवर्जिता ।
असद्रूपा च सद्रूपा सदसद्रूपशालिनी ॥ ८७॥

कैलासनिलया गौरी वृषगा वृषवाहना ।
सोमसूर्याग्निनयना सोमसूर्याग्निविग्रहा ॥ ८८॥

विषमेक्षणदुर्धर्षा लङ्कादाहकरी दितिः ।
वैकुण्ठविलसन्मूर्तिः वैकुण्ठनिलयानिला ॥ ८९॥

नमोमूर्तिस्तमोमूर्तिस्तेजोमूर्तिरमेयधीः ।
सूर्यमूर्तिश्चन्द्रमूर्तिः यजमानशरीरिणी ॥ ९०॥

आप्यमूर्तिरिलामूर्तिः नरनारायणाकृतिः ।
विषयाज्ञानभिन्ना च विषयाज्ञाननिर्वृतिः ॥ ९१॥

सुखवित्सुखिनी सौख्या वेदवेदाङ्गपारगा ।
स्रुक् स्रुवा च वसोर्धारा यागशक्तिरशक्तिहृत् ॥ ९२॥

यज्ञकृत् प्राकृतिर्यज्ञा यज्ञरागविवर्धिनी ।
यज्ञभोक्त्री यज्ञभागा सौभाग्यवरदायिनी ॥ ९३॥

व्यापिनी दशदिग्बाहुर्दिगन्ता बलिदायिनी ।
कृपा विश्वेश्वरी स्वङ्गा शताक्षी कामदेवता ॥ ९४॥

कामचारप्रिया कामा कामाचारपरायणा ।
चिकित्सा वेदविद्या च वैद्यमातामहौषधिः ॥ ९५॥

महौषधिरसप्रीता विकराला कलातिगा ।
मेघशक्तिर्महावृष्टिः सुवृष्टिः शिवशर्मदा ॥ ९६॥

रुद्राणी रुद्रवदना रुद्रपूज्यान्नपूर्णिका ।
अन्नदानरसान्नाद्या तृप्तिदा भोजनप्रिया ॥ ९७॥

कर्मपाशप्रदा पङ्क्तिः पाकशक्तिः पचिक्रिया ।
सुपक्वफलदा वाञ्छा वाञ्छाधिकफलप्रदा ॥ ९८॥

सर्वयन्त्रमयी पूर्णा सर्वभूताश्रयाम्बिका ।
ब्राह्मणी ब्रह्मशक्तिश्च चराचरविभाविनी ॥ ९९॥

चराचरगतिर्जैत्री लक्षालक्षेश्वरार्द्धहृत् ।
गुहशक्तिर्गणेट् शक्तिर्नारसिंही सहस्रदृक् ॥ १००॥

सर्पमालोत्तरीया च सर्प सर्वाङ्गभूषणा ।
वाराही च सहस्राक्षी कूर्मशक्तिः शुभालया ॥ १०१॥

शेषरूपा शेषशक्तिः शेषपर्यङ्कशायिनी ।
वराहदंष्ट्रा वलिधिः कामधीः काममोहिनी ॥ १०२॥

मायिनी चित्तसदना कामिकामप्रवर्धिनी ।
सर्वलक्षणसम्पूर्णा सर्वलक्षणनाशिनी ॥ १०३॥

नादरूपा बिन्दुरूपा कृतकर्मफलप्रदा ।
ध्रुवशक्तिः ध्रुवारोहा ध्रुवाटोपा ध्रुवार्थदा ॥ १०४॥

ध्रुवाकाराग्निहोत्राढ्या ध्रुवाचारा ध्रुवस्थितिः ।
ध्रुवाध्रुवमयी ध्रौव्या चिद्रूपानन्दरूपिणी ॥ १०५॥

हृद्रूपा बगला कृष्णा नीलग्रीवा कुधीहरा ।
पवित्रदृष्टिः पावित्र्यकारिणी ऋषिवत्सला ॥ १०६॥

शिशूत्सङ्गधरासङ्गा सङ्गरागप्रवर्धिनी ।
निःसङ्गा सङ्गबहुला चतुराश्रमवासिनी ॥ १०७॥

चतुर्वर्णपरिष्वङ्गा चतुर्वर्णबहिस्थिता ।
निराश्रया रागवती रागिमानससंश्रया ॥ १०८॥

ब्राह्मणी राजदुहिता वैश्या शूद्रा परासुरा ।
गृहाश्रमसमासीना गृहधर्मनिरूपिणी ॥ १०९॥

गृहधर्मा विषादघ्नी ब्रह्मचर्यनिषेविणी ।
वानप्रस्थाश्रमस्था च यतिधर्मा स्फुरत्तनुः ॥ ११०॥

संस्थितिः प्रलया सृष्टिः सर्गस्थित्यन्तखेलकृत् ।
ज्ञानशक्तिः क्रियाशक्तिः छायाशक्तिरपूर्वकृत् ॥ १११॥

नानावादविशेषज्ञा नानावादनिरङ्गता ।
शून्यवादनिराकारा धर्मवादनिरूपिणी ॥ ११२॥

नवचण्डी क्रियाहेतुः सङ्कल्पाकल्पनातिगा ।
निर्विकल्पा विकल्पाद्या सङ्कल्पाकल्पभूरुहा ॥ ११३॥

सृष्टिघ्नी च स्थितिघ्नी च विनाशघ्नी त्रिरूपभृत् ।
अयोध्या द्वारका काशी मथुरा काञ्च्यवन्तिका ॥ ११४॥

विशोका शोकमार्तण्डी पाञ्चाली शोकनाशिनी ।
शमनियमशक्तिश्च धर्मशक्तिर्जयध्वजा ॥ ११५॥

मुक्तिः कुण्डलिनी भुक्तिर्विषदृष्टिः समेक्षणा ।
कृपेक्षणा कृपार्द्राङ्गी कृपार्चिता कृपाश्रुतिः ॥ ११६॥

महापुराद्रिनिलया महापुरकृतस्थितिः ।

अज्ञानकल्पनानन्ता प्रपञ्जकलनातिगा ॥ ११७॥

साम्यदृष्टिः देहपुष्टिः कृतसृष्टिर्हृताखिला ।
वेणुपुण्यपरीपाकाऽयोनिजा वह्निसम्भवा ॥ ११८॥

महापुरसुखासीना डमड्डमरुदर्पिता ।
महापुरमहादेवी डमरुप्रीतिवल्गिता ॥ ११९॥

भद्रकाली पितृशक्तिर्ह्यालसा भुवनेश्वरी ।
गायत्री च चतुर्वक्त्रा त्रिपुरा वीरवन्दिता ॥ १२०॥

यमाम्बा त्रिगुणानन्दा कैवल्यपददायिनी ।
वडवा सदया भूस्था शाक्तसर्गप्रवर्तिनी ॥ १२१॥

इन्द्रादि देवजननी एलाम्बा कोलरूपिणी ।
कुम्भदर्पहरा दोला दोलाक्रीडनलालसा ॥ १२२॥

शीतला विष्णुमाया च चतुर्वक्त्रनमस्कृता ।
मातङ्गी विष्णुजननी प्रेतासननिवासिनी ॥ १२३॥

गरुत्मत्गमनानीला ब्रह्मास्त्रा ब्रह्मभूषिता ।
सिद्धिः पाशुपतास्त्रा च नीलेन्दीवरलोचना ॥ १२४॥

रुक्मा शङ्करजननी कर्मनाशा च शाम्भवी ।
त्रिगा वामनशक्तिश्च हिरण्यगर्भभूसुरा ॥ १२५॥

वाग्वादिनी च वर्णा च शङ्करार्धशरीरिणी ।
दारुणा मोहरात्रिश्च भ्रमादिगणरूपिणी ॥ १२६॥

दीपिका क्रीडवरदा मोहिनी गरलाशना ।
कपर्दार्चितसर्वाङ्गी कपर्दाभरणप्रिया ॥ १२७॥

सावित्री भैरवीविघ्ना पीतापीताम्बरप्रभुः ।
दशवक्त्रानवद्याङ्गी त्रिंशल्लोचनभूषिता ॥ १२८॥

दशांघ्रिर्दशदोर्दण्डा स्फुरद्दंष्ट्रातिभीषणा ।
कर्पूरकान्तिवदना नीलबाहुरनुत्तमा ॥ १२९॥

ब्रह्मगेया मुनिध्येया ह्लीङ्कारा कामविग्रहा ।
षड्बीजा नवबीजा च नवाक्षरतनुः खगा ॥ १३०॥

दशार्णा द्वादशार्णाढ्या षोडशार्णाविबीजगा ।
मालामन्त्रमयी जय्या सर्वबीजैकदेवता ॥ १३१॥

जपमाला च जयदा जपविघ्नविनाशिनी ।
जपकर्त्री जपस्तोत्रा मन्त्रयन्त्रफलप्रदा ॥ १३२॥

मन्त्रावरणरूपैका यन्त्रावरणदेवता ।
पद्मिनी पद्मपत्राक्षी शमी यज्ञाङ्गदेवता ॥ १३३॥

यज्ञसिद्धिः सहस्राक्षी सहस्राक्षपदप्रदा ।
रेणुवशावताराढ्या महिषान्तकरी समित् ॥ १३४॥

ऋग्वेदा च यजुर्वेदा सामवेदा त्रयीपरा ।
अभिचारप्रियाथर्वा पञ्चतन्त्राधिदेवता ॥ १३५॥

अभिचारक्रिया शान्तिः शान्तिमन्त्राधिदेवता ।
अभिचारोपशमनी सर्वानन्दविधायिनी ॥ १३६॥

अथर्वपाठसम्पन्ना लेखनी लेखकस्थिता ।
भूमलेख्या वर्णशक्तिः सर्वशक्तिः प्रसिद्धिदा ॥ १३७॥

कीर्तिकामा कलाकामा कामाक्षी सर्वमङ्गला ।
शूलेश्वरी कुशूलघ्नी चिन्ताशोकविनाशिनी ॥ १३८॥

चिन्तादिदेवता भूतनायका नलकूबरी ।
करालीत्यूर्ध्वकेशी च श्रीधरी च विनायकी ॥ १३९॥

कामेश्वरी च कौवेरी पद्मावत्यभिधागतिः ।
ज्वालामुखी च कौवेरी विजया मेघवाहना ॥ १४०॥

महाबला महोत्साहा महाभयनिवारिणी ।
कामिनी शाङ्करी काष्ठा सहस्रभुजनिग्रहा ॥ १४१॥

प्रभा प्रभाकरी भाषा सप्ताश्वरथसंस्थिता ।
अलकापुरसंस्थाना मृडानी विन्ध्यनिश्चला ॥ १४२॥

हिमाचलकृतक्रीडा पीडापापनिवारिणी ।
अर्धमात्राक्षरा सन्ध्या त्रिमात्रा भारती धृतिः ॥ १४३॥

वेदमाता वेदगर्भा कौशिकी त्र्यम्बका स्वरा ।
अम्बालिका क्षुधा तृष्णा धूम्रा रौद्रा दुरत्यया ॥ १४४॥

पानपात्रकरा जातिः श्रद्धावार्ता चितास्थिता ।
दुर्गाणी रक्तचामुण्डावृतिः सोमावतंसिनी ॥ १४५॥

शरण्यार्या दुर्गापरा सारा ज्योस्ला महास्मृतिः । ज्योत्स्ना
जगत्प्रतिष्ठा कल्याणी छाया तुष्टिश्च तामसी ॥ १४६॥

तृष्णा वाग्धीश्च नद्धा च गदिनी चक्रधारिणी ।
लज्जा सहस्रनयना महिषासुरमर्दिनी ॥ १४७॥

भीमा भद्रा भगवती नवदुर्गाऽपराजिता ।
मेघाष्टादश दोर्दण्डा दुर्गा कात्यायनी रतिः ॥ १४८॥

सर्वतः पाणिपादोरुर्भ्रामरी चन्द्ररूपिणी ।
इन्द्राणी च महामारी सर्वतोऽक्षिशिरोमुखा ॥ १४९॥

सप्ताधिसंश्रया सत्ता सप्तद्वीपाब्धिमेखला ।
सूर्यदीप्तिर्वज्रपंक्तिः पानोन्मत्ता च पिङ्गला ॥ १५०॥

सर्वज्ञा विश्वमाता च भक्तानुग्रहकारिणी ।
विश्वप्रिया प्राणशक्तिरनन्तगुणनामधीः ॥ १५१॥

सर्वकल्याणनिलया शारदा त्र्यम्बिका सुधा ॥ १५२॥

श्री शङ्कर उवाच --

दिव्यं नामसहस्रं ते रेणुकाया मयेरितम् ।
सर्वकामसमृद्ध्यर्थमनेन भज षण्मुख ॥ १५३॥ समृद्धि अर्थं अनेन

भुक्तिदो मुक्तिश्चापि भजतां कल्पपादपः ।
जयप्रदो विशेषेण नानेन सदृशो मनुः ॥ १५४॥

पुरश्चरणमुद्दिष्टं सहस्रं नवकं शुभम् ।
विजयार्थं विशेषेण प्रयोगं साधयेत्ततः ॥ १५५॥

हस्तयोर्भाजनं कृत्वा प्रसादं याचयेन्मुहुः ।
लब्धप्रसादो भक्तेभ्यश्चिन्तयेधृदि रेणुकाम् ॥ १५६॥ चिन्तयेत् हृदि

भक्तितो योगिनीवृन्दं पूजयेत्तोषयेन्मुदा ।
तत्पात्रं पूरयेदन्नैः पूजयित्वोपचारकैः ॥ १५७॥

शृङ्गिनादं समाकर्ण्य प्रार्थयेदुदयाशिषम् ।
सर्वेभ्यश्चाशिषो लब्ध्वा भुञ्जीत सहबान्धवैः ॥ १५८॥

नानाजातिभवान्भक्तान् प्रीयतां रेणुकेति च ।
उत्सर्गादिप्रसादेन तोषयेच्च मुहुर्मुहुः ॥ १५९॥

दीपकाडमरुध्वानैरुदयोद्दामकीर्तनैः ।
गोदोहसमये कुर्याद्गोदोहजमहोत्सवम् ॥ १६०॥

जगदम्बामयं पश्यन् सकलं दृष्टिगोचरम् ।
दीपिकाडमरूत्साहं भक्तैः सह निशां नयेत् ॥ १६१॥

अवर्षणे धराकम्पे संक्षोभे सागरस्य च ।
आवर्तनसहस्रेण निश्चिते जायते शुभम् ॥ १६२॥

दुष्टोत्पाते महाघोरे सङ्कटे दुरतिक्रमे ।
अयुतावर्तनान्नूनमसाध्यमपि साधयेत् ॥ १६३॥

निशीथे वा प्रदोषे वा जगदम्बालये शुचिः ।
नवरात्रं जपेद्यस्तु प्रत्यहं नववारकम् ॥ १६४॥

नामभिः पूजनं होमं प्रत्ययं कुरुते व्रती ।
प्रसन्नास्मै महामाया प्रत्यक्षं भवति ध्रुवम् ॥ १६५॥

त्रिवारं नियतं जप्त्वा षण्मासं व्रतवान् शुचिः ।
दारिद्र्यार्णवमुत्तीर्य विपुलां श्रियमाप्नुयात् ॥ १६६॥

विशेषसाधनं कुर्यात्पुरश्चर्यां पुनः सुधीः ।

साधयेत्सकलान्कामान् सत्वरं नात्र संशयः ॥ १६७॥

पुष्पाज्यपायसतिलैर्हरिद्रामधुचन्दनैः ।
नानापरिमलद्रव्यैर्भक्तियुक्तो यजेन्मुदा ॥ १६८॥

इदं पठति यो भक्त्या शृणुयाद्वापि नित्यशः ।
निर्विघ्नं लभतेऽभीष्टं जीवेच्च शरदां शतम् ॥ १६९॥

शुक्लपक्षेऽथवा कृष्णे भूताधः षष्ठिकादिनात् ।
साधकः साङ्गविधिना साधयेत्स्तोत्रमन्त्रवित् ॥ १७०॥

इषे शुक्लनवम्यन्तमारभ्य प्रतिपत्तिथिम् ।
नवरात्रोक्तविधिना कलशं पूजयेन्मुदा ॥ १७१॥

सङ्कटे सत्वरे कृत्ये विधिनावर्तयेत् स्थितिम् ।
प्राप्नोति वाञ्छितं सद्यः सर्वविघ्नविनाशकृत् ॥ १७२॥

घृतद्वीपद्वयं कृत्वा दक्षिणोत्तरभागयोः ।
नानाभोगोपचारैश्च तोषयेज्जगदम्बिकाम् ॥ १७३॥

कुङ्कुमागरुकस्तूरीचन्दनाभिरर्चयेत् ।
कुमारीं पूजयेत्भक्त्या ब्राह्मणांश्च सुवासिनीम् ॥ १७४॥

षड्रसैः स्वादु पक्वान्नैर्भोजयेच्च चतुर्विधैः ।
शक्तितो दक्षिणां दद्याद्वासोधान्यं गवादिकम् ॥ १७५॥

वित्तशाठ्यं न कुर्वीत सर्वकार्यसमृद्धये ।
प्रणमेत् प्रणमेद्भक्त्या प्रोच्यतामुदयोस्त्वतिः ॥ १७६॥

भूषितो मङ्गलस्नानैः स्वालेप्याम्बरमाल्यवान् ।
विभूष्याङ्गं कपर्दैश्च प्रज्वाल्य घृतदीपिकाम् ॥ १७७॥

यद्यदारभ्यते कार्यं तदादौ च समापने ।
सम्पूज्याम्बां कुमारींश्च पूजयेज्जपपूर्वकम् ॥ १७८॥

भूताष्टम्यां नवम्यां च भौमे च नियतः पठेत् ।
सर्वान् कामानवाप्नोति नात्र कार्या विचारणा ॥ १७९॥

भूता रक्षः पिशाचाद्या वैरिणो दस्यवोपि च ।
पठ्यतेऽनुदिनं यत्र तद्गृहं न विशन्ति च ॥ १८०॥

अब्धिसञ्चरणे पोते लङ्घने गिरिरोहणे ।
चित्तक्षोभे प्रसादे च विषादे वा पठेदिदम् ॥ १८१॥

दुःस्वप्नदर्शने मार्गे विड्वरे कलहागमे ।
यात्राकाले पठेदेतत् सर्वमाङ्गलिकागमे ॥ १८२॥

निष्कामो वा सकामो वा पुरुषार्थप्रदं यतः ।
त्रैवर्णिकः पठेदेतदितरः पाठयेत् सदा ॥ १८३॥

सौभाग्यं लभते नारी कन्या सर्वोत्तमं वरम् ।
मृतवत्सा लभेत्पुण्यमायुष्मत्सन्ततिं शुभाम् ॥ १८४॥

असूतिर्लभते सूतिं सुसूतिं कष्टसूतिका ।
उदासीना लभेत्प्रीतिं पतिबालप्रियङ्करी ॥ १८५॥

न वैधव्यमवाप्नोति न सपत्नीं लभेत्क्वचित् ।
सुरूपा सुभगा धन्या विरहं नाप्नुयात्क्वचित् ॥ १८६॥

च्यवद्गर्भवती या च दृढगर्भवती भवेत् ।
वित्तापत्यपरीवारा पतिमण्डितविग्रहा ॥ १८७॥

सहस्रनामकं स्तोत्रं पठ्यते यत्र वेश्मनि ।
ग्रहाः कालग्रहाः पीडां नैव कुर्वन्ति कर्हिचित् ॥ १८८॥

यद्गृहे पूजितं ह्येतत् पुस्तकं वा सुभक्तितः ।
शक्तितो हवनं कुर्याद् विघ्नस्तत्र विनश्यति ॥ १८९॥

गर्भिणी स्रावयेन्नित्यं गर्भदोषान्निवर्तते ।
सूतिकायतने प्रोक्तं सूतिकाबालसौख्यदम् ॥ १९०॥

सर्वं मन्त्राधिकमिदं भक्त्या यः सर्वदा पठेत् ।
श्रावयेत् पाठयेद्वापि सर्वत्र लभते जयम् ॥ १९१॥

पुस्तकानि प्रदेयानि विप्रेभ्यो नवभक्तितः ।
सोपचाराणि विधिना रेणुका तुष्टिहेतवे ॥ १९२॥

पुत्रकामी शुभान् पुत्रान् धनार्थी विपुलं धनम् ।
कन्यार्थी लभते कन्यां कुलशीलादिमण्डिताम् ॥ १९३॥

विद्याकामो लभेद्विद्यां कवित्वं कविताप्रियः ।
प्रज्ञातिशयमासाद्य समर्थो ग्रन्थधारणे ॥ १९४॥

मुच्यते निगडाबद्धः स्खलद्गीः स्पष्टवाग्भवेत् ।
कामुकः काममाप्नोति भूपालं वशमानयेत् ॥ १९५॥

कुष्ठापस्माररहितो ज्वररोगविवर्जितः ।
रोगी रोगविनिर्मुक्तः शत्रुसङ्घाज्जयो भवेत् ॥ १९६॥

शीतलो जायते वह्निर्विषं स्यादमृतोपमम् ।
शस्त्राण्युत्पलतां यान्ति पठनादस्य भक्तितः ॥ १९७॥

अन्धो दृष्टिमवाप्नोति बधिरः श्रुतिमान् भवेत् ।
मूको वाचालतामेति रेणुकायाः प्रसादतः ॥ १९८॥

रेणुकेत्येकनामेदं धर्मार्थकाममोक्षदम् ।
फलं नामसहस्रस्य समर्थो वक्तुमस्ति कः ॥ १९९॥

रेणुकास्मरणान्नूनं विषं नाक्रमेत् तनौ ।
सर्वपीडोपशान्तिश्च सकलार्थसुखोदयः ॥ २००॥

नारायणः श्रिया युक्तः सावित्रीसहितो विधिः ।
अहं भवानीसहितो रेणुकार्चनतोऽर्चिता ॥ २०१॥

सर्वं यज्ञफलं तस्य पारायणफलं तथा ।
साङ्गयोगफलं तस्य रेणुका येन पूजिता ॥ २०२॥

उच्यते बाहुमुद्धृत्य बहुनोक्तेन षण्मुख ।
सेव्यते रेणुका यैस्ते सेव्यन्ते त्रिदशैरपि ॥ २०३॥

इति श्री पद्मपुराणे मायोपाख्याने रेणुकाप्रस्तावे
रेणुकाप्रकृतिभावे शङ्करषण्मुखसंवादे
शङ्करप्रोक्तं रेणुकासहस्रनामस्तोत्रं सम्पूर्णम् ॥